# चम्पूरामायणे

# बालकाण्डम्

१६ – १९.०३.२०१८

vyoma
॥ वाचं धेनुमुपासीत ॥
Saṃskṛtam • Value Education • Technology



vyoma ॥वाचं धेनुमुपासीत॥ Samskrtam - Value Education - Technology

# पुनरावर्तनम्

- भवन्तस्तावत् – विष्णोः साहाय्यार्थं वानरभल्लूकादीन् जनयितुं देवान् प्रति ब्रह्मण आदेशः
- पुरैव किल मम जृम्भारम्भे सम्भूतवान् जाम्बवानिति ।
- अथ वैतानाद् – यज्ञाग्नेः आगतेन पुरुषेण पायसप्रदानम्
- कौसल्यायै - पायसविभागः

अवभृथेऽवसिते सरयूतटाद् अथ यथायथमुच्चलिते जने ।
दशरथः परिपूर्णमनोरथः पुरमगात्पुरुहूतपुरोपमाम् ॥ २४ ॥

- यज्ञसमाप्तौ अयोध्यां प्रति गमनम् ।
- अवभृथे, अवसिते, सरयू-तटात्, अथ, यथा-यथम्, उच्चलिते, जने, दशरथः, परिपूर्ण-मनोरथः, पुरम्, अगात्, पुरुहूत-पुर-उपमाम् ।
- अथ = तदनन्तरम्, पायसस्वीकरणादनन्तरम्

अवभृथेऽवसिते सरयूतटाद् अथ यथायथमुच्चलिते जने ।
दशरथः परिपूर्णमनोरथः पुरमगात्पुरुहूतपुरोपमाम् ॥ २४ ॥

- अगात् = गतवान्
- कः अगात्? दशरथः
- कीदृशः दशरथः? परिपूर्णमनोरथः = सिद्धकामः
- किम् अगात्? पुरम् = नगरीम्, अयोध्यानामिकां स्वराजधानीम्
- कीदृशीं पुरम्? पुरुहूत-पुरोपमाम् = इन्द्रनगरेण अमरावत्या तुल्याम्

अवभृथेऽवसिते सरयूतटाद् अथ यथायथमुच्चलिते जने ।
दशरथः परिपूर्णमनोरथः पुरमगात्पुरुहूतपुरोपमाम् ॥ २४ ॥

- कदा अगात्? अवसिते = समाप्ते सति
- कस्मिन् अवसिते? अवभृथे = दीक्षान्तस्नाने
- उच्चलिते = प्रस्थिते सति
- कस्मिन् उच्चलिते? जने = यज्ञार्थमागते जनसमूहे
- कस्माद् उच्चलिते? सरयूतटात् = यज्ञस्थानात् सरयूतीरात्
- कुत्र उच्चलिते? यथायथम् = यथास्वम्, स्व-स्व-गृहं प्रति

vyoma ॥ वाचं धेनुमुपासीत ॥ Samskritam · Value Education · Technology

# अवभृथेऽवसिते सरयूतटाद् अथ यथायथमुच्चलिते जने ।
# दशरथः परिपूर्णमनोरथः पुरमगात्पुरुहूतपुरोपमाम् ॥ २४ ॥

- अन्वयः – अथ अवभृथे अवसिते, जने सरयूतटात् यथायथम् उच्चलिते (सति), परिपूर्णमनोरथः दशरथः पुरुहूतपुरोपमां पुरम् अगात् ।
- तात्पर्य्यम् – पुत्रकामेष्टौ समाप्तायाम्, यज्ञार्थमागतेषु सर्वेषु जनेषु सरयूतीरात् स्व-स्व-प्रदेशं प्रति प्रस्थितेषु, पायसलाभेन सिद्धकामः दशरथः इन्द्रनगरेण तुल्यां स्वराजधानीम् अयोध्यां प्रत्यगच्छत् ।

vyoma
॥ वाचं धेनुमुपासीत ॥
Samskritam - Value Education - Technology

अवभृथेऽवसिते सरयूतटाद् अथ यथायथमुच्चलिते जने ।
दशरथः परिपूर्णमनोरथः पुरमगात्पुरुहूतपुरोपमाम् ॥ २४ ॥

- अवभृथे – “दीक्षान्तोऽवभृथो यज्ञे” (अमरः)
- अवसिते – अव+ “षो अन्तकर्मणि” + क्त
- यथायथम् – यथा अनतिक्रम्य । अव्ययीभावः । “यथास्वं तु यथायथम्” (अमरः)
- पुरम् – रेफान्तः, स्त्री, २.१ ।
- अगात् – “इण् गतौ” – लुङ्, प्रथम.१

अवभृथेऽवसिते सरयूतटाद् अथ यथायथमुच्चलिते जने ।
दशरथः परिपूर्णमनोरथः पुरमगात्पुरुहूतपुरोपमाम् ॥ २४ ॥

- पुरुहूतपुरोपमाम् – पुरुहूतस्य पुरम्, पुरुहूतपुरम् उपमा यस्याः सा, ताम् । “वृद्धश्रवाः शुनासीरः पुरुहूतः पुरन्दरः” (अमरः)
- द्रुतविलम्बितं वृत्तम् – “द्रुतविलम्बितमाह नभौ भरौ” । प्रतिपादं १२ अक्षराणि । न-भ-भ-र गणाः ।

# अपाटवात् केवलमङ्गकानां मनोज्ञकान्तेर्महिषीजनस्य ।
# शनैः शनैः प्रोज्झितभूषणानि चकाशिरे दौहृदलक्षणानि ॥ २५ ॥

- गर्भधारणम् ।
- अपाटवात्, केवलम्, अङ्गकानाम्, मनोज्ञ-कान्तेः, महिषी-जनस्य, शनैः, शनैः, प्रोज्झित-भूषणानि, चकाशिरे, दौहृद-लक्षणानि ।
- चकाशिरे = अराजन्त
- के चकाशिरे? दौहृदलक्षणानि = गर्भचिह्नानि

अपाटवात् केवलमङ्गकानां मनोज्ञकान्तेर्महिषीजनस्य ।
शनैः शनैः प्रोज्झितभूषणानि चकाशिरे दौहृदलक्षणानि ॥ २५ ॥

- कथं चकाशिरे? महिषीजनानाम् = राजपत्नीनां कौसल्या-सुमित्रा-कैकेयीनाम्
- मनोज्ञकान्तेः = मनोहरलावण्यात्
- केवलम् = अत्यन्तम्
- अङ्गकानाम् = हस्ताद्यवयवानाम्
- अपाटवात् = पटुत्वाभावात्, श्रान्तत्वात्

vyoma
॥ वाचं धेनुमुपासीत ॥
Samskrtam - Value Education - Technology

# अपाटवात् केवलमङ्गकानां मनोज्ञकान्तेर्महिषीजनस्य ।
# शनैः शनैः प्रोज्झितभूषणानि चकाशिरे दौहृदलक्षणानि ॥ २५ ॥

- शनैः शनैः = मन्दं मन्दम्, दिने दिने
- प्रोज्झितभूषणानि = त्यक्ताभरणानि
- अन्वयः – महिषीजनस्य मनोज्ञकान्तेः, अङ्गकानां केवलम् अपाटवात् प्रोज्झितभूषणानि दौहृदलक्षणानि शनैः शनैः चकाशिरे ।
- तात्पर्य्यम् – राजपत्नीनां वर्धमानलावण्यात्, हस्ताद्यवयवानां श्रान्तत्वात् त्यक्ताभरणानि गर्भचिह्नानि दिने दिने व्यक्तानि बभूवुः ।

vyoma
॥ वाचं धेनुमुपासीत ॥
Samskrtam - Value Education - Technology

# अपाटवात् केवलमङ्गकानां मनोज्ञकान्तेर्महिषीजनस्य ।
# शनैः शनैः प्रोज्झितभूषणानि चकाशिरे दौहृदलक्षणानि ॥ २५ ॥

- अपाटवात् – पटोः भावः, न पाटवम्, तस्मात्
- अङ्गकानाम् – अल्पानि अङ्गानि, तेषाम् । अङ्ग + क ।
- महिषीजनस्य – "कृताभिषेका महिषी" (अमरः)
- प्रोज्झितभूषणानि – प्रोज्झितानि भूषणानि येषु तानि
- चकाशिरे – "काशृ दीप्तौ" – लिट्, प्रथम.३

अपाटवात् केवलमङ्गकानां मनोज्ञकान्तेर्महिषीजनस्य ।
शनैः शनैः प्रोज्झितभूषणानि चकाशिरे दौहृदलक्षणानि ॥ २५ ॥

- दौहृदलक्षणानि – दौहृदस्य लक्षणानि । “द्विहृदयां नारीं दौहृदिनीमाचक्षते” (अष्टाङ्गसङ्ग्रहः) ।
- उपेन्द्रवज्रा वृत्तम् ।

# मन्दमन्दमपयद्वलित्रया गाधताविषयनाभिगह्वरा ।
# कोसलेन्द्रदुहितुः शनैरभूत् मध्ययष्टिरपि दृष्टिगोचरा ॥ २६ ॥

- गर्भिण्याः कौसल्यायाः वर्णनम्
- मन्दमन्दम्, अपयत्, वलित्रया, गाधता-विषय-नाभि-गह्वरा, कोसलेन्द्र-दुहितुः, शनैः, अभूत्, मध्य-यष्टिः, अपि, दृष्टि-गोचरा
- अपयत् = अपगच्छत्
- किम् अपयत्? वलित्रया = उदरभागस्थं चर्मरेखात्रयं

मन्दमन्दमपयद्वलित्रया गाधताविषयनाभिगह्वरा ।
कोसलेन्द्रदुहितुः शनैरभूत् मध्ययष्टिरपि दृष्टिगोचरा ॥ २६ ॥

- कस्याः? कोसलेन्द्रदुहितुः = कौसल्यायाः
- अभूत् = जातम्
- कीदृशम् अभूत्? दृष्टिगोचरा = चक्षुर्विषयः
- का दृष्टिगोचरा अभूत्? मध्ययष्टिः = तन्तुसदृशः मध्यभागः

vyoma
॥ वाचं वेदयामसि ॥
Samskritam - Value Education - Technology

# मन्दमन्दमपयद्वलित्रया गाधताविषयनाभिगह्वरा ।
# कोसलेन्द्रदुहितुः शनैरभूत् मध्ययष्टिरपि दृष्टिगोचरा ॥ २६ ॥

- कीदृशी मध्ययष्टिः? गाधताविषयनाभिगह्वरा – गाधतायाः = उत्तानत्वस्य विषयीभूतं यत् नाभिगह्वरम् = नाभिरूपं कुहरं, तेन युक्ता
- कथं दृष्टिगोचरा अभूत्? शनैः = मन्दम्

मन्दमन्दमपयद्वलित्रया गाधताविषयनाभिगह्वरा ।
कोसलेन्द्रदुहितुः शनैरभूत् मध्ययष्टिरपि दृष्टिगोचरा ॥ २६ ॥

- अन्वयः – कोसलेन्द्रदुहितुः वलित्रया मन्दमन्दम् अपयत्, गाधताविषयनाभिगह्वरा मध्ययष्टिः अपि शनैः दृष्टिगोचरा अभूत्
- तात्पर्य्यम् – वर्धमानेन गर्भेण कौसल्यायाः उदरे विद्यमानं महाभाग्यसूचकं वलित्रयम् अपगतम्, तस्याः नाभिरूपं कुहरम् उत्तानत्वं प्राप्तम्, तस्याः तन्तुसदृशः मध्यभागः शनैः चक्षुर्विषयः अभूत् ।

vyoma
॥ वाचं धेनुमुपासीत ॥
Samskritam - Value Education - Technology

# मन्दमन्दमपयद्वलित्रया गाधताविषयनाभिगह्वरा ।
# कोसलेन्द्रदुहितुः शनैरभूत् नध्ययष्टिरपि दृष्टिगोचरा ॥ २६ ॥

- अपयत् – "पय गतौ" – लङ्, प्रथम.१
- गाधता... – गाधतायाः विषयः, नाभिः एव गह्वरम्, गाधताविषयः नाभिगह्वरं यस्याः सा
- कोसलेन्द्रदुहितुः – कोसलेन्द्रस्य दुहिता, ऋकारान्तः, स्त्री, ६.१
- अभूत् – "भू सत्तायाम्", लुङ्, प्रथम.१

मन्दमन्दमपयद्वलित्रया गाधताविषयनाभिगह्वरा ।
कोसलेन्द्रदुहितुः शनैरभूत् नध्ययष्टिरपि दृष्टिगोचरा ॥ २६ ॥

- मध्ययष्टिः – मध्यं यष्टिः इव

- रथोद्धता वृत्तम् – “रान्नराविह रथोद्धता लगौ” । प्रतिपादम् ११ अक्षराणि, र-न-र-लघु-गुरु ।

vyoma ॥ वाचं धेनुमुपासीत ॥ Samskrtam - Value Education - Technology

न्यग्रोधपत्रसमतां क्रमशः प्रयाताम्
अङ्गीचकार पुनरप्युदरं कृशाङ्ग्याः ।
जीवातवे दशमुखोरगपीडितानां
गर्भच्छलेन वसता प्रथमेन पुंसा ॥ २७ ॥

- न्यग्रोध-पत्र-समताम्, क्रमशः, प्रयाताम्, अङ्गीचकार, पुनः, अपि, उदरम्, कृशाङ्ग्याः, जीवातवे, दश-मुख-उरग-पीडितानाम्, गर्भ-च्छलेन, वसता, प्रथमेन, पुंसा

vyoma ॥ वाचं धेनुमुपासीत ॥ Samskritam · Value Education · Technology

न्यग्रोधपत्रसमतां क्रमशः प्रयाताम् अङ्गीचकार पुनरप्युदरं कृशाङ्ग्याः ।
जीवातवे दशमुखोरगपीडितानां गर्भच्छलेन वसता प्रथमेन पुंसा ॥ २७ ॥

- अङ्गीचकार = प्राप्नोत्
- कः अङ्गीचकार? उदरम् = कुक्षिः
- कस्याः उदरम्? कृशाङ्ग्याः = तन्वङ्ग्याः कौसल्यायाः
- किम् अङ्गीचकार? न्यग्रोधपत्रसमताम् = वटपत्रतुल्यत्वम्
- कीदृशीं न्यग्रोधपत्रसमताम्? क्रमशः प्रयाताम् = शनैः अपगताम्

vyoma ॥ वाचं धेनुमुपासीत ॥
Samskritam · Value Education · Technology

न्यग्रोधपत्रसमतां क्रमशः प्रयाताम् अङ्गीचकार पुनरप्युदरं कृशाङ्ग्याः ।
जीवातवे दशमुखोरगपीडितानां गर्भच्छलेन वसता प्रथमेन पुंसा ॥ २७ ॥

- कथम् अङ्गीचकार? पुनरपि = भूयोऽपि
- केन हेतुना अङ्गीचकार? गर्भच्छलेन वसता प्रथमेन पुंसा = गर्भरूपेण तिष्ठता आदिपुरुषेण नारायणेन
- किंनिमित्तं गर्भच्छलेन वसता? जीवातवे = सञ्जीवनौषधार्थम्
- केषां जीवातवे? दशमुखोरगपीडितानाम् = रावणरूपेण महासर्पेण दष्टानाम्

न्यग्रोधपत्रसमतां क्रमशः प्रयाताम् अङ्गीचकार पुनरप्युदरं कृशाङ्ग्याः ।
जीवातवे दशमुखोरगपीडितानां गर्भच्छलेन वसता प्रथमेन पुंसा ॥ २७ ॥

- अन्वयः – दशमुखोरगपीडितानां जीवातवे गर्भच्छलेन वसता प्रथमेन पुंसा कृशाङ्ग्याः उदरं क्रमशः प्रयातां न्यग्रोधपत्रसमतां पुनरपि अङ्गीचकार ।
- तात्पर्य्यम् – पूर्वं कौसल्यायाः उदरं वटपत्रतुल्यं कृशमासीत् । गर्भवृद्ध्या क्रमेण तत्तुल्यत्वम् अपगतम् । तथाऽपि रावणरूपमहासर्पपीडितानां सञ्जीवनौषधाय गर्भरूपेण तिष्ठता आदिपुरुषेण नारायणेन तस्याः उदरं पुनरपि वटपत्रतुल्यमेव जातम् (वटपत्रशायी नारायणः इति पुराणप्रसिद्धिः) ।

vyoma
॥ वाचं धेनुमुपासीत ॥
Samskrtam - Value Education - Technology

न्यग्रोधपत्रसमतां क्रमशः प्रयाताम् अङ्गीचकार पुनरप्युदरं कृशाङ्ग्याः ।
जीवातवे दशमुखोरगपीडितानां गर्भच्छलेन वसता प्रथमेन पुंसा ॥ २७ ॥

- न्यग्रोधपत्रसमताम् – न्यग्रोधस्य पत्रम्, न्यग्रोधपत्रस्य समता । “न्यग्रोधो बहुपाद् वटः”
- जीवातवे – उकारान्तः, पुं, ४.१ । “जीवातुर्जीवनौषधम्” (अमरः)
- दशमुखोरगपीडितानाम् – दशमुखः एव उरगः, दशमुखोरगेण पीडिताः, तेषाम् । “उरगः पन्नगो भोगी” (अमरः)

vyoma ॥वाचं धेनुमुपासीत॥
Samskritam - Value Education - Technology

न्यग्रोधपत्रसमतां क्रमशः प्रयाताम् अङ्गीचकार पुनरप्युदरं कृशाङ्ग्याः ।
जीवातवे दशमुखोरगपीडितानां गर्भच्छलेन वसता प्रथमेन पुंसा ॥ २७ ॥

- गर्भच्छलेन – गर्भस्य छलम्, तेन । गर्भ + छल – तुगागमः । "छे च" (६.१.७३) – ह्रस्वस्य च्छकारे परे तकारागमः । तस्य श्चुत्वेन चकारः ।
- वसता – "वस निवासे" + शतृ । तकारान्तः, पुं, ३.१
- पुंसा – सकारान्तः, पुं, ३.१
- उत्प्रेक्षा, रूपकम्
- वसन्ततिलकावृत्तम्

# सङ्क्षेपः

- अवभृथेऽवसिते – यागानन्तरं नगरं प्रतिनिवृत्तः दशरथः
- अपाटवात् – राजपत्नीषु गर्भचिह्नानि दृष्टानि
- मन्दमन्दमपयद् – गर्भोदये कौसल्यायाः वर्णनम्
- न्यग्रोधपत्रसमताम् – गर्भोदयात् पूर्वं परञ्च कौसल्यायाः उदरस्य वटपत्रतुल्यत्वम्






QUESTIONS/DOUBTS?

Email us @

sanskritfromhome@vyomalabs.in









- For downloading course-materials, login @ www.sanskritfromhome.in
- Subscribe to our youtube channel @ vyoma-samskrta-pathasala
- Buy our Samskrita-learning products @ www.digitalsanskritguru.com
- Support our cause for Samskrita-Samskriti @ www.vyomalabs.in